# जन्मदिनपूजादिपद्धतिः

(वर्षवृद्धिदिनकृत्यप्रयोगः)

नानानिबंधग्रंथेभ्यः संगृहीता

**श्रीमत्पण्डितवामनसंशोधिता**

मुद्रक एवं प्रकाशक:

**खेमराज श्रीकृष्णदास,™**

अध्यक्ष : श्रीवेंकटेश्वर प्रेस,

खेमराज श्रीकृष्णदास मार्ग, मुंबई - ४०० ००४.

श्रीः

# अथ जन्मदिनपूजादिपद्धतिः

## प्रारभ्यते

श्रीगणेशायनमः ।। अथजन्मदिनेसूर्य्यादिनवग्रहदान-पूजनपूर्वक श्रीषष्ठीपूजाप्रयोगः ।। तत्रयजमानःप्रात-रुत्थाय मार्कंडेयादिदीर्घायुषःषष्ठीं च स्मृत्वाप्रणम्या-वश्यकं विधाय शुक्लतिलादिना सर्वौषधीभिस्तीर्थोदकेन च स्नात्वाऽहते शुद्धे वाससी नवे परिधायाचम्य स्नानांग-संध्योपासनतर्प्पणादीनि कर्माणि समाप्य कुंकुमेनोर्ध्वपुंड्र-तिलकं विधाय सुरंजितवस्त्राणि भूषणानि च धृत्वा नीराज्य प्रदीपितं धूपितं पूजागृहं गत्वा तत्रासने उप-विश्य तीर्थावाहनासनपूजनभूतापसर्प्पणभूतशुद्धिप्राणा-यामादि विधायाचम्य प्रयतो भूत्वा तिलकुशजलैस्ताम्र-पात्रादिना संकल्पंकुर्य्यात् ।। ॐ हरिस्तत्सन्नम इति मासपक्षाद्युच्चार्य्य नामगोत्रे समुच्चार्य्यामुकशर्म्मा वा

वर्म्माहं वर्षवृद्धौ दीर्घायुरारोग्यताप्रतिपत्तये जन्मदि-नांगत्वेन करिष्यमाणश्रीगणपतिग्रहलोकपालकलश-षोडशमातृसप्तवसोर्धाराचिरंजीविषष्ठीस्कंदप्रद्युम्ना-दिषट्कृत्तिकाजीवमातृजन्मांगदेवतामत्स्यार्चनमोचन-गुरुपूजा गुडतिलदुग्धपानसर्वदानादिकर्मतयाकार्य्य-सिद्धयर्थं पूर्वांगत्वेन श्रीगणपतिं यथासंभवोपचारैः पूजयिष्ये । इतिसंकल्पं कृत्वा । यथास्वशाखोक्तप्रकारेण पाद्यादिभिरुपचारैः पूजयित्वा ॐ सकलविघ्नहर्त्रे गणा-धिपतये नमः ॥ ध्यायेत् ॥ ॐ लंबोदर महाकाय सर्वोपद्रवनाशन॥त्वत्प्रसादादविघ्नेन दीर्घायुष्यं भवेन्मम ॥१॥ आयुर्देहि यशो देहि श्रियं देहि बलं तथा ॥ पुत्रं पौत्रं प्रपौत्रं च देहि मे गणनायक ॥२॥ ॐ वक्रतुण्ड महाकाय सूर्यकोटिसमप्रभ ॥ अविघ्नं कुरु मे देव सर्वकार्य्येषु सर्वदा ॥३॥ इति गणेशं संपूज्य ततोनव-ग्रहान्पूजयेत् ॥ ॐ सूर्य्यादिनवग्रहेभ्यो नमः स्नानादिभिः संपूज्य प्रार्थयेत् ॐ सूर्य्यः सोमोऽगारकज्ञौगुरुभृग्वर्कि-राहवः ॥ केतुश्चायुः प्रयच्छन्तु सानुकूला ग्रहा मम ॥१॥ स्नानादिकम् ॥ ॐ चतुर्वेदमूर्तये पूर्णकलशाय नमः ॥ प्रार्थना ॥ ॐ पूर्णाशाः पूर्णसंकाशाः पूर्णाश्चैव मनोरथः ॥ पूर्णकुंभप्रसादेन यज्ञं मे पूर्णतां व्रजेत् ॥१॥ स्नानगंधा-दिकम् ॥ ॐ गौर्य्यादिषोडशमातृकाभ्यो नमः । प्रा० ॐ गौरी पद्मा शची मेधा सावित्री विजया जया ॥ देवसेना

स्वधा स्वाहा मातरो लोकमातरः ।। हृष्टिः पुष्टिस्तथा-तुष्टिरात्मदेवी तथास्तु मे ।।१।। स्नानादिभिः ॐ सप्त-सोर्धाराभ्यो नमः ।।प्रार्थना ।। ॐ लक्ष्मीः श्रीश्चधृतिर्मेधा प्रज्ञा स्वाहा सरस्वती ।। सर्वदा वृद्धिकार्य्येषु पूजया घृतमातरः ।। आयुरारोग्यमैश्वर्य्यं प्रयच्छंतु यथेप्सितम् ।।१।। इति प्रार्थयेत् ।। अथ संक्षेपप्रकारेण नवग्रहदानम् ।। आवाहयेत् ॐ भूर्भुवः स्वः अमुकग्रह इहागच्छेह संतिष्ठ इत्यावाह्य तत एतानि स्नानगंधाक्षतपुष्पधूप-दीपनैवेद्यानि सोपकरणैतद्देयद्रव्याय नमः इति त्रिः पठेत् ।। अमुकग्रहप्रीतिकामनया ब्राह्मणाय नमः ।। इत्यपि त्रिवारं पठेत् कुशतिलजलान्यादाय ॐ अद्य सोपकरण-ममुकग्रहप्रीतिकामनया एतद्देयद्रव्यदानं ददानि ।। पुनः संकल्पं कुर्य्यात् ॐ हरिःतत्सदद्य मासोत्तमे मासेऽमुकरा-शिगते भास्करेऽमुकमासेऽमुकपक्षेऽमुकवासरान्वितायां-ममुकतिथावमुकगोत्रोत्पन्नोऽमुकशर्मावा वर्म्माहं एवं-विधे शोभनानुकूल पुण्यसमये दीर्घायुरारोग्यज्ञाताज्ञात-समस्तपापक्षयानंतरजन्मराशेर्नामराशेर्जन्मलग्नाद्वर्षल-ग्नाद्वामुकस्थानस्थितअमुकग्रहकृतारिष्टदशांतरसंधिपा-चकाष्टकवर्गजन्यजनितजनिष्यमाण झटिति सर्वा-रिष्टोपशांत्यर्थम् ।। एवं सर्वत्र ।। सूर्य्यग्रहप्रीतिकामनया इदं रक्तं वासोबृहस्पतिदेवताकंगोधूमान्नंप्रजापति-देवताकं ताम्रसुवर्णं वह्निदेवताकं रक्तचंदनं वनस्पति-

दैवतं यथानाम गोत्राय ब्राह्मणायाहं ददे ।। अद्य कृतैतत्सूर्य्यग्रहदानंप्रतिष्ठार्थमिदं हिरण्यमूल्योपकल्पितं ताम्रं वह्निदेवताकं यथानामगोत्राय ब्राह्मणायाहं ददे ।। प्रार्थना ।। ॐ सप्ताश्वरथसंयुक्तो द्विभुजश्च रथे स्थितः ।। अरुणःसारथिर्यस्य स सूर्य्यः प्रीयतां मम ।।१।। इति सूर्य्यस्य ।। एवं सर्वत्र पूर्ववत् ।। अथ चंद्रस्य ।। मासपक्षादिसर्वारिष्टोपशांत्यर्थमित्यंतं पूर्ववत्सर्वं वाच्यम् चंद्रग्रहप्रीतिकामनया इदं श्वेतं वासो बृहस्पतिदैवतं तंडुलान्नं प्रजापतिदैवतं रौप्यशंखौ चंद्रदैवतौ घृतं विष्णुदैवतं श्वेतचंदनं वनस्पतिदैवतं यथानामेति० दानप्रतिष्ठां पूर्ववत् प्रार्थ० ॐ द्विजराजो महापुण्यस्ताराधीशो निशाकरः । औषधीशोग्रहेशाश्च स सोमः प्रीयतां मम ।।२।। भौमस्य ।। भौमग्रहप्रीतिकामनया इदं रक्तं वासो बृहस्प० मसूरान्नं प्रजा० ताम्रसुवर्णे वह्नि० रक्तचंदनं वनस्प० गुडं वन० यथानामेति प्रार्थ० ॐ येनार्जिता महाकीर्तिर्भूमिपूत्रेण शाश्वती ।। शत्रवश्च हता येन स भौमः प्रीयतां मम ।।३।। बुधस्य इदं हरितं वासो बृहस्प० इदं मुद्गान्नं प्रजाप० हरिद्रां वनस्पति० सुवर्णं वह्निदै० इमां श्वेतशर्करां सोमदै० प्रार्थ० ॐ बुधो बुद्धिप्रदाता च सोमपुत्रो महाद्युतिः ।। आदित्यस्य रथे तिष्ठन्स बुधः प्रीयतां मम ।।४।। गुरोः ।। गुरुग्रहप्री० इदं पीतं वासो बृह० इदं चणकान्नं प्रजा० सुवर्णं वह्निदै०

हरिद्रां वनस्पति० केशरं वनस्प० प्रार्थना ।। ॐ मेरुमूर्ध्नि समाक्रांतो देवराजपुरोहितः ।। ज्ञाता च सर्वशास्त्राणां स गुरुः प्रीयतां मम ।।५।। शुक्रस्य ।। शुक्रग्रहप्री० इदं श्वेतं वासो बृहस्प० इदं तंडुलान्नं प्रजा० रौप्याश्वौ चंद्रदैवतौ दधिसोमदै० प्रार्थना ॐ सोमतुल्यप्रभा यस्य योऽसुराणां गुरुः स्मृतः ।। जेता च सर्वशत्रूणां स शुक्रः प्रीयतां मम ।।६।। शनेः ।। शनिग्रहप्री० इदं नीलं वासो बृहस्प० माषान्नं प्रजाप० लोहलवणौ धर्मदै० तैलं विष्णुदै० यथेति प्रार्थ० ॐ प्रत्यर्चिवह्निसंकाशो भिन्नांजनसमप्रभः ।। छाया मार्तण्डसंभूतः स शनिः प्रीयतां मम ।।७।। राहोः राहुग्रहप्री० इदं धूम्रं वासो बृह० सर्षपान्नं प्रजा० लोहलवणे धर्मदै० तैलं विष्णुदै० यथेति प्रार्थना ।। ॐ रक्षार्थं धूम्रवर्णाभो विजितारिर्महाबलः ।। अबाहुश्चांतरिक्षस्थः स राहुः प्रीयतां मम ।।८।। केतोः ।।

इदं नीलं वासो बृह० तिलान्नं प्रजा० लोहलवणे धर्म० तैलं विष्णु० यथेति पूर्ववत्सर्वं पाठ्यम् ।। प्रा० ॐ अग्निपुत्रो महातेजाः केतुः सर्वग्रहांतकः ।। क्षोभयेद्यः प्रजाः सर्वाः स केतुः प्रीयतां मम ।।९।।इति नवग्रहदानम् ।। ततो वेदिकायां स्थापितमृन्मयादिप्रतिमायां षष्ठीभट्टारकाच्चिरंजीवीनां पूजां कुर्य्यात् ।। तत्रसंकल्पः ॐ तत्सदद्येत्यादिमासाद्युच्चार्य्यामुकगोत्रोत्पन्नोऽमुकशर्मा

वा वर्म्माहं मम वर्षवृद्धौ संवत्सरावच्छिन्नातुलारोग्यसु-खहेतुकदीर्घायुर्वृद्धये षष्ठीपूजनं तथामार्कण्डेयादिपूजन-महं करिष्ये ।। इति संकल्प्य घंटापूजनं कृत्वा ॐ जयध्वनिमंत्रमातः स्वाहा सर्वनादमयायै घंटायै नमः ।। शंखस्थापनं च कृत्वा ।। विनियोगं कुर्यात् ॐ अस्य श्रीषष्ठीभट्टारकामंत्रस्य ब्रह्माऋषिर्देवीगायत्री छंदः श्री षष्ठीभट्टारकादेवता मम सर्वाभीष्टसिद्धये जपे पूजायां विनियोगः ।। शिरसि ब्रह्मर्षये नमः ।। मुखे गायत्रीछंदसे नमः ।। हृदये षष्ठीभट्टारकायै नमः ।। जपे विनियोगाय नमः सर्वांगे ।। ॐ अंगुष्ठाभ्यां नमः हृदयाम नमः ॐ ह्रीं तर्जनीभ्यां नमः शिरसे स्वाहा ॐ श्रींमध्यमाभ्यां नमः शिखायै वषट् ॐ षष्ठीभट्टारकायै० अनामिकाभ्यां नमः कवचायहुं नमः ॐ कनिष्ठिकाभ्यां नमः नेत्राभ्यां वौषट् ॐ ह्रीं श्रीं षष्ठीभट्टारकायै नमः करतलकरपृष्ठाभ्यां नमः अस्त्राय फट् ।। ततः प्राणायामत्रयं कृत्वा ध्यायेत् ॐ चतुर्भुजां महादेवीं तुंगपीनस्तनीं शिवाम् ।। मयूर-वाहनारूढां पीतकौशेय वाससाम् ।। प्रफुल्लपद्मवदना-मर्कपद्मासनस्थिताम् ।। सर्वांगभूषितां सौम्यां नीलो-त्पलसदृक्कचाम् ।। स्रवत्पीयूषवदनां वराभयकरद्वयाम् ।। वामेन कौंकुमं पात्रं दक्षिणेन च लेखनीम् ।। धारयंतीमङ्कगतं स्कंदं प्रेम्णा च पश्यतीम्।।समस्तजीव-जननीं महाषष्ठीं विचिंतयेत् ।। इति ध्यानम्। मूलमंत्र-

स्वरूपम् यथा ॐ ह्रीं श्रींषष्ठीभट्टारकायै नम इतिमूल-मंत्रंपठन् कुंकुमेन ताम्रादिपात्रे षट्कोणयंत्रं सँल्लिख्य गंधादिभिः ॐममण्डूकादिपरतत्वांतर्गतपीठदेवताभ्यो नमः ततः प्राणप्रतिष्ठां कृत्वा आबाहयेत् मूल ॐ एह्येहि देवि पद्माक्षि षष्ठिषट्कृत्तिकालये ।। आगच्छ वरदेमातः पश्य मां सौम्यचक्षुषा ।।१।। इत्यावाहनम् ।। ततोऽर्घ्यम् ॐ जातिसिद्धार्थसहितं दूर्बादलतिलान्वितम् ।। सर्वाढ्यं षष्ठि मे मातरष्टांगोर्घ्यः प्रगृह्यताम् ।।२।। इत्यर्घ्यम् । स्नानम् । मूलम् । ॐ गंगादितीर्थादानीतं मया भक्त्या महेश्वरि ।। स्नानं कुरु जगन्मातः सर्वांगसु-न्दरे शुभे।।३।। इति स्नानम् ।। वस्त्रम् । मूलम् । ॐ स्नानादनंतरं देवि वाससी परमे शुभे।।तवांगकोमलस्पर्शे वाससी प्रतिगृह्यताम् ।।४।। इति वस्त्रम् ।। ततो दोरकम् ।। मूलम् । ॐ तंतुना च समाहारां कौसुंभेन सुरंजिताम् ।। दोरकं ते ददाम्यद्य सौभाग्यं तंतुवर्द्धनम् ।।५।। इति दोरकम् ।। ततश्चंदनम् । मूलम् । सुगंधि-परिपूर्णेदं शीतलं चारुचित्रितम् ।।अनुलेपनकं मातश्चंदनं प्रतिगृह्यताम् ।।६।। इति चंदनम् ।। अथाक्षतान् ॐ अक्षतान्धवलाञ्छुद्धान्कुंकुमेनानुलेपितान् ।। गृहाण कृपया षष्ठि सदा त्वं भक्तवत्सले ।।७।। इत्यक्षताः ।। पुष्पाणि । मूलम ॐ मालतीचंपकं जातीशतवर्गयुतानि च ।। पुष्पाणि तव पूजार्थमानीतानि गृहाण वै ।।८।।

इति पुष्पाणि ।। अथ माला मूलम् । ॐ ऋतुकालोद्भवा हृद्याः सुगंधातिमनोहराः नानापुष्पमया माला गृहाण परमेश्वरि ।।९।। इतिमाला । धूपम् ।। मूलम् ।। वनस्पतिरसोत्पन्नं गंधाढ्यं गंधमुत्तमम् ।। आघ्रेयं सर्व-देवानां धूपं त्वं प्रतिगृह्यताम् ।।१०।। इति धूपम् । दीपम् मूलम् ॐ आज्यवर्तिसमायुक्तं वह्निना योजितं मया ।। दीपं गृहाण देवेशि त्रैलोक्यतिमिरापहे ।।११।। इति दीपम् ।।अथ नैवेद्यम् ।।मूलम् । ॐ मोदकानिविचित्राणि शुक्लतण्डुलकं दधि ।। अनेकविधपक्वान्नमपूपवटकादिकम् ।। फेणिकाघृतपूरादिकर्पूरैलासुवासितम् ।। नैवेद्यं ते मया दत्तं परिभुंक्ष्व यथेच्छया ।।१२।। इति नानाविधि नैवेद्यम् ।। अथाचमनम् ।। मूलम् ।। मुखदुर्गन्धिनाशार्थं मुखप्रक्षालनाय च ।। गण्डूषकरणायैव पुनराचमनं कुरु ।।१३।। इतिपुनराचमनम् ।। अथ फलानि ।। मूलं ।। ॐ दाडिमाक्षोटकादीनि फलानि विविधानि ते ।। पूगी फलं श्रीफलं ते प्रयच्छामि नमो नमः ।।१४।। इति फलानि ।। अथ दक्षिणा ।। मूलम् ।। ॐ महाषष्ठि महामाये जगज्जनिविधायिनि ।। दक्षिणां ते प्रदास्यामि दीर्घमायुः प्रयच्छ मे ।।१५।। इति दक्षिणा ।। ततो आवरणार्चनं कुर्यात् ।। ॐ ह्रां श्रां हृदयायनमः हृदयं पूजयामि एवं ह्रीं श्रीं शिरसेस्वाहा शिरःपू० ॐ ह्रूं श्रूं शिखायै वषट् शिखापू ॐ ह्रैं श्रैं कवचायहुं कवचं पू० ह्रौं श्रौं नेत्राभ्यां

वौषट् नेत्रेप्० ह्रः श्रः अस्त्राय फट् अस्त्रपू० ततो गंधाक्षतादिभिः षट्कृत्तिकाः पूजयेत् ।। ॐ शिवायै नमः एवं संभूत्यै० प्रीत्यै० सन्नत्यै०।। अनुसूयायै० मायायै० ६ प्रार्थना ॐ यूयं शिवायाः षड्देव्यः स्कंदरक्षापरायणाः ।। दीर्घायुषं मां च कुरुध्वं तथा जन्मवासरे ।।१।। अथ तदुत्संगे स्कंदप्रद्युम्नौ प्रजयेत् ॐ स्कंदायनमः इतिस्ना- नादिकं समर्पयामि ।। प्रा० ॐ सेनापते पावकिने नमोस्तु कृपापरीतामलदिव्यमूर्त्ते । कृपामयो यज्ञ इवा मलस्त्वं देवेश षष्ठीश नमो नमस्ते ।।१।। कार्तिकेय महाभाग गौरीहृदयनंदन ।। सर्वतो रक्ष मां वीर कुरु दीर्घायुषं सदा ।। इति स्कंदपूजा ।। अथ प्रद्युम्नपूजा । स्नानादिकैः ॐ प्रद्युम्नाय नमः ॐ प्रकृष्टैश्वर्य्यसंपन्नः प्रद्युम्नस्त्वं प्रकीर्त्यसे ।। तस्माज्जन्मदिने चाद्य कुरु मां त्वं चिरायुषम् ।। इति प्रद्युम्नपूजा।।

ततो गंधादिभिः पूजयेत् ।। ॐ मम जन्मनक्षत्राय नमः एवं जन्मराशये० जन्मतिथ्यै० जन्मवासराय० जन्मपक्षाय० जन्मलग्नाय० जन्मसंवत्सराय० जन्म- ऋतवे० जन्मयुगाय० जन्ममासाय० जन्ममुहूर्त्ताय० जन्मयोगाय० जन्मायनाय० जन्मकरणाय० जन्मस- मयाय० जन्मानुसूयायै० ततः प्रार्थयेत् ॐ जन्मर्क्षराशि- तिथिवासरपक्षलग्नसंवत्सरर्तुयुगमाससुहूर्त्तयोगाः।।जन्मा- यनकरणकालवसुंधराद्याः संपूजिताश्च वितरंतु सुदीर्घ-

मायुः ॥१॥ इति जन्मांगदेवतापूजा ॥ततो मार्कंडेयपूजा ॥ तदुक्तं वाराहसंहितायाम् ॥ ध्यानम् ॐ द्विभुजं जटिलं श्यामं सुवृद्धं चिरजीविनम् ॥ मार्कंडेयं नरो भक्त्या दण्डहस्तं विचिन्तयेत् ॥ इतिध्यानम् ॐ मार्कण्डेयाय नमः इति पाद्यादिभिरुपचारैः संपूज्य । मंत्रः प्रार्थनायाः ॐ मार्कण्डेय महाभाग सप्तकल्पान्तजीवन ॥ चिरंजीवी यथा त्वं भो भविष्यामि तथा मुने ॥ रूपवान्वित्तवाँश्चैव श्रिया युक्तश्च सर्वदा ॥ आयुरारोग्य-सिद्ध्यर्थं प्रसीद भगवन्मुने ॥ चिरञ्जीवी यथा त्वं भो मुनीनां प्रवरो द्विजः ॥ कुरुष्व मुनिशार्दूल तथा मां चिरजीविनम् ॥ नववर्षायुतं प्राप्य महता तपसा पुरा ॥ सप्तकल्पकृतं येन ह्यायुर्मे संप्रयच्छतु ॥ इति प्रार्थ्य तदग्रे पुटकादौ गो दुग्धं तिलमिश्रितं सगुडं पलद्वयमितं स्थापयेत् ॥ इति मार्कण्डेयपूजा ॥ ततो व्यासमावाह्य ॐ व्यासाय नमः इति स्नानादिभिः संपूज्य प्रार्थयेत् ॐ संप्रत्य नागतातीतज्ञानाधार तपोनिधे ॥ नारायणांश-संभूत ममाद्य वरदो भव ॥ इति व्यासपूजा ॥ ततःपरशुराममावाह्य ॐ परशुरामाय नमः इति स्नाना-दिभिः संपूज्य प्रार्थयेत् ॐ रेणुकेय महावीर्य्यं कार्तवी-र्य्यार्जुनांतक॥आयुः प्रयच्छ मे राम जामदग्न्य नमोऽस्तुते ॥ इति परशुरामपूजा ॥ ततोऽश्वत्थामानमावाह्य ॐ अश्वत्थाम्ने नमः इति स्नानादिभिः संपूज्य प्रार्थयेत् ॐ

द्रोणपुत्र महाभाग रुद्रतेजःसमुद्भव ।। अमरायुर्भवान्वै मे त्वमश्वत्थामन्नमोस्तु ते ।। इति ततःकृपमावाह्य ॐ कृपाचार्य्याय नमः इति गंधादिभिः संपूज्य प्रार्थयेत् ॐ द्विजेन्द्र भरताचार्य्य सर्वशास्त्रविशारद । शरणं त्वां प्रपन्नोस्मि कृप मां रक्ष सर्वदा ।। इति कृपपूजा ।। ततो बलिमावाह्य ॐ बलये नमः इतिगंधादिभिः संपूज्य प्रार्थयेत् ॐ दैत्येन्द्रकुलसंभूत दानयज्ञक्रियारत ।। प्रपन्नः शरणं त्वाहं दीर्घमायुः प्रयच्छमे ।। इति बलिपूजा ।। ततो हनुमत्पूजा आवाह्य ॐ हनुमते नमः ।। इतिगंधा० प्रा० ॐ अंजनी गर्भसंभूत कपीन्द्र सचिवोत्तम ।। रामप्रिय नमस्तुभ्यं हनुमन्पाहि मां सदा ।। इति हनुमत्पूजा ।। ततोबिभीषणमावाह्य ॐ विभीषणाय नमः ।। इति गंधादिभिः संपूज्य प्रार्थयेत् ॐ बिभीषण नमस्तुभ्यं रामपादाब्जसेवक ।। आयुरारोग्यमैश्वर्य्यं देहि पौलस्त्यनंदन ।। इति बिभीषण पूजा ।। ततः कृतांजलिः सर्वान्प्रार्थयेत् ।। ॐ यथादीर्घायुषो यूयं मार्कण्डेयमुखाः शुभाः ।। तथा चिरंजीविनं मां कुरध्वंजन्मवासरे ।। इति चिरंजीविपूजा ।। ततो नाममंत्रैरन्यदेवताः पूजयेत् ।। ॐ प्रजापतये नमः एवं ब्रह्मणे० विष्णवे० शिवाय० सूर्याय० चंद्रमसे० कुलदेवतायै० ग्रामदेवतायै० श्रीस्वेष्ट देवतायै० क्षेत्रपालाय० वास्तुपुरुषाय० ॐकश्यपादि-सप्तर्षिभ्यो० प्रकृतिपुरुषाभ्यां मातापितृभ्यां० एवं

द्रोणपुत्र महाभाग रुद्रतेजःसमुद्भव ।। भवायुर्वरदो मे त्वमश्वत्थामन्नमोस्तु ते ।। इति ततःकृपमावाह्य ॐ कृपाचार्य्याय नमः इति गंधादिभिः संपूज्य प्रार्थयेत् ॐ द्विजेन्द्र भरताचार्य्य सर्वशास्त्रविशारद । शरणं त्वां प्रपन्नोस्मि कृप मां रक्ष सर्वदा ।। इति कृपपूजा ।। ततो बलिमावाह्य ॐ बलये नमः इतिगंधादिभिः संपूज्य प्रार्थयेत् ॐ दैत्येन्द्रकुलसंभूत दानयज्ञक्रियारत ।। प्रपन्नः शरणं त्वाहं दीर्घमायुः प्रयच्छमे ।। इति बलिपूजा ।। ततो हनुमत्पूजा आवाह्य ॐ हनुमते नमः ।। इतिगंधा० प्रा० ॐ अंजनी गर्भसंभूत कपीन्द्र सचिवोत्तम ।। रामप्रिय नमस्तुभ्यं हनुमन्पाहि मां सदा ।। इति हनुमत्पूजा ।। ततोबिभीषणमावाह्य ॐ विभीषणाय नमः ।। इति गंधादिभिः संपूज्य प्रार्थयेत् ॐ बिभीषण नमस्तुभ्यं रामपादाब्जसेवक ।। आयुरारोग्यमैश्वर्य्यं देहि पौलस्त्यनंदन ।। इति बिभीषण पूजा ।। ततः कृतांजलिः सर्वान्प्रार्थयेत् ।। ॐ यथादीर्घायुषो यूयं मार्कण्डेयमुखाः शुभाः ।। तथा चिरंजीविनं मां कुरध्वंजन्मवासरे ।। इति चिरंजीविपूजा ।। ततो नाममंत्रैरन्यदेवताः पूजयेत् ।। ॐ प्रजापतये नमः एवं ब्रह्मणे० विष्णवे० शिवाय० सूर्याय० चंद्रमसे० कुलदेवतायै० ग्रामदेवतायै० श्रीस्वेष्ट देवतायै० क्षेत्रपालाय० वास्तुपुरुषाय० ॐकश्यपादि-सप्तर्षिभ्यो० प्रकृतिपुरुषाभ्यां मातापितृभ्यां० एवं

संपूज्य तत उत्थाय आरार्त्तिकं कुर्य्यात् ॐरत्ननीराजनं श्रेष्ठं कर्पूरज्वालयोज्ज्वम् ।। आरार्तिकं गृहाणेशि जगन्मातर्नमोस्तु ते ।। इति नीराजनम् ।। दाडिमाक्षोटकपूगीफलादिपुष्पाक्षतादिकं हस्ते गृहीत्वा त्रिः परिक्रमेत् ततः प्रदक्षिणीकृत्य नमस्कुर्य्यात् मंत्रा यथा ।। ॐ जय देवि जगन्मातर्जगदानंदकारिणि ।। प्रसीद मम कल्याणि महाषष्ठि नमोस्तु ते ।।१।। षष्ठिदेविनमस्तुभ्यं सूतिकागृहशायिनि । पूजिता परया भक्त्या दीर्घमायुः प्रयच्छ मे ।।२।। त्वमेव माताऽदितिरद्रिजा त्वं गौरी त्वमेवासि धृतिः क्षमा त्वम् ।। कीर्तिः समृद्धिर्भुवनस्य धात्री त्वामेव देवि प्रणतोऽस्मि नित्यम् ।।३।। यथा सर्वाणि भूतानि त्वयिस्यूतानि रत्नवत् ।। चराचराणि देवेशि त्वत्तो जातान्यनेकशः ।।४।। पुमान्साक्षी भवत्येष तेन सयेनबुद्धिमान् ।। दीर्घमायुः प्रयच्छाशु महाषष्ठि नमोस्तु ते ।।५।। त्वं सृष्टिराद्या सृजसे प्रजास्त्वं स्थितावथैताः सकला बिभर्षि ।। त्वामेव वाचा मनसा च कर्मणा समर्च्चयाम्यायुरतीव मेस्तु ।।६।। जननीं सर्वभूतानां वर्द्धिनीं कुलसंपदाम् ।।७।। साधिनीं सर्वसिद्धीनां महाषष्ठीं नतावयम् ।।८।। रुद्राणी रुद्ररूपेण महाविघ्नविनाशिनि ।। प्राणदे वरदे देवि महाषष्ठि नमोस्तु ते ।।८।। रूपं देहि यशो देहि जयं भवति देहि मे ।। पुत्रान्देहि धनं देहि सर्वकामाँश्च देहि मे ।।९।। शक्तिस्त्वं

सर्वदेवानां मातेव हितकारणी ।। नारायणीस्वरूपेण दिर्घमायुः प्रयच्छ मे ।।१०।। गौरीपुत्रो यथा स्कंदः सेनानी रक्षितस्त्वया ।। तथैव मम रक्षां त्वं कुरु देवि नमोस्तु ते ।।११।। इति षष्ठीं नमस्कृत्य तथान्यान्न-मस्कृत्य ।। ततो मत्स्यपूजा ।। ॐमत्स्यायनमः इति स्नानादिभिः संपूज्यः ।। प्रार्थयेत् ॐपूर्वं त्वदुदराज्जातो दीर्घायुर्विष्णुरच्युतः ।। तस्मात्वं पूज्यसे मत्स्य दीर्घायु-ष्यायतेनमः ।। ततस्तं हस्तेनास्पृशन्मोचयेत् ।। मंत्रौयथा ॐअभयं भवतो ह्यस्तु मत्स्य गच्छ यथा सुखम् ।। जले वस सदा स्वस्थो मत्प्रसादात्सुखी भव ।। मत्स्यजीव जले त्वं हि प्रविश्य मम हस्ततः ।। तव मोक्षप्रसादेन चास्तु मे चिरजीविता।। इति पठित्वा जलमध्ये मत्स्यं मोचयेत् ।। इति मत्स्यपूजा ।। ततः प्राक्संस्थापितं सगुडतिलं गोदुग्धपात्रमादाय मंत्रं पठन् पिबेत् । मंत्रो यथा ।। ॐ सतिलं गुडसंमिश्रमंजल्यर्द्धमितं पयः ।। मार्कण्डेयवरं लब्ध्वा पिबाम्यायुष्यहेतवे ।।१।। इति दुग्धपानम् ।। अत्रैव शिष्टाचारादमृतलतारसं सह गोदुग्धेन महामृत्युं-जय मंत्रेण पिबेत् ।। तथैव शिष्टसमाचाराच्छागादि-बलिदानमपिदद्यात् ।। तद्यथा तत्र तरुणं शुभलक्षणं पशुमानीय ॐबलिरूपिणे छागाय नमः इति स्नानगंधा-दिभिः संपूज्य ॐ आँपशवे नमः पशुशुद्धिं प्रोक्षयामि नमः ।। इति कुशजलैस्तं संप्रोक्ष्य ततः ॐतत्सदद्येत्यादिदेश-

कालौ संकीर्त्यामुकगोत्रोऽमुकराशिरमुकशर्म्मा वा वर्म्माहं मया कृतैतज्जन्मदिनांगत्वेन श्रीगणपति नवग्रहषोडश-मातृका सप्तवसोर्धारा देवताकुलदेवतादिसमस्तदेवता-सहितश्रीषष्ठीदेवीप्रीतिकामोमुं छागं गंधपुष्पाद्यर्चितं वह्निदैवतमाग्नेयमहं घातयिष्ये इति पशूपरि जलं क्षिपेत् ॥ ततो दानप्रतिष्ठां दद्यात् ततो मन्त्रान्पठेत् ॥ ॐ पशो त्वं बलिरूपेण मम भाग्यादुपस्थितः ॥ तृप्ता भवतु सा देवी सरक्तपिशितस्तवै ॥१॥ ॐ पशुरूपं परित्यज्य त्वं गंधर्वस्वरूपधृक् ॥ गौरीलोकं समासाद्य मम कल्याणदो भव ॥२॥ छेद्योसि बलिरूपेण बले त्वं परमार्थतः ॥ छेदभेदोद्भवं दुःखं नच कार्य्यं त्वयाप्रभो ॥३॥ यज्ञार्थे पशवः श्रेष्ठा यज्ञार्थे पशुघातनम् ॥ अतस्त्वां घात-यिष्यामि तस्माद्यज्ञे वधोऽवधः ॥४॥ इति गंधाक्षतादिकं छागशिरसि क्षिपेत् ततः खड्गं गंधाक्षतादिभिः संपूज्य प्रार्थयेत् ॥ ॐ इयं येन धृता क्षोणी हतश्च महिषासुरः तीक्ष्णधाराय शुद्धाय तस्मै खड्गाय ते नमः ॥ ततएकेन प्रहारेण तं घातयेत् ॥ ततः छागशिरो निवेदयेत् इति बलिदानम् ॥ अथ सांगतार्थं तिलस्वर्णदानम् ॐ सोप-करणातिलस्वर्णाभ्यां नमः इति गंधादिभिः संपूज्य ब्राह्म-णाय नमः ३ इति पठित्वा ॐ तत्सदद्यः सोपकरणतिल-सुवर्णदानं ददाति इति द्विजहस्ते जलंक्षिपेत् ॐ अद्येत्या-दिसमुच्चार्याऽमुकशर्म्मा वा वर्म्माऽहं कृतैतद्वर्षवृद्धयंग-

पूजनसांगतासिद्धिपूर्वकं झटिति दीर्घायुरारोग्यतावाप्तिज्ञाताज्ञातसमस्तपापप्रशमनोत्तरैतत्तिलसंख्याककल्पकोटिशतावच्छिन्नानुपमसुखप्राप्तिकाम् इमे तिलसुवर्णे प्रजापति वह्निदेवताके यथानामेति दानप्रतिष्ठां दद्यात् ॥ ततो मंत्रान्पठेत् ॥ ॐ तिलाः श्वेतास्तिलाः कृष्णास्तिला गोमूत्रसन्निभाः ॥ ते मे दहन्तु पापानि शरीरेण कृतानि च ॥ तिलाः पापहरा नित्यं विष्णुदेहसमुद्भवाः ॥ तिलदानेन मे सर्वं पापं नाशय केशव ॥ तिलाः स्वर्ण समायुक्ताः पवित्राः पापनाशकाः ॥ विष्णु प्रीतिकरा नित्यमतः शांतिं प्रयच्छ मे ॥ हिरण्यगर्भेति पठित्वा ब्राह्मणाय दद्यात् ॥ ततोऽन्यदानादिकमपिकुर्य्यात् ततश्चोत्तरांगतया गणेशग्रहलोकपालमातृवसोर्धाराश्चाभ्यर्च्य यथाक्रमेण पाद्यार्घ्यादिभिर्ब्राह्मणान् गुरुं च संपूज्य नमस्कृत्य भूयसीं दक्षिणां दत्वा सुवासिनीभिर्नीराजनादिकं कारयित्वा तिलकाक्षतारोपणं निर्माल्यग्रहणशिष्टजनपादाभिवंदनादिकं सर्वं स्वकुलदेशाचारव्यवस्थया सर्व कुर्य्यात् ॥ ततः स्वसुहृद्गुरुब्राह्मणबंधुजनमित्रकलत्राद्यन्वितो ब्राह्मणभुक्तशेषमन्नं सकृद्भुंजीयादिति । तत्रैवं ब्राह्मणभोजन संकल्पः॥ॐ तत्सदिति मासपक्षाद्युच्चार्य्यामुकशर्मावावर्म्माऽहं ज्ञाताज्ञातसमस्तपापप्रशमनोत्तरमद्यारभ्य संवत्सरावच्छिन्नारोग्याद्याप्तिकामनया न्यूनाति-

रिक्तदोषापनोदार्थं श्रीपरमेश्वर प्रीतये सांगफलाप्तये च नानानामगोत्रान्ब्राह्मणान्सदक्षिणान्नेनाहं भोजयिष्ये ॥ इति ब्राह्मणभोजनसंकल्पः ॥ ततो गंधाक्षतान्गृहीत्वा विसर्जयेत् ॥ ॐ यान्तुदेवगणाः सर्वे पूजामादाय मामकीम् ॥ अभीष्टकामसिद्ध्यर्थं पुनरागमनाय च ॥ गच्छन्तु वै सुरश्रेष्ठाः स्वस्थाने परमेश्वराः ॥ यत्र यत्रास्तियत्स्थानं तत्र तत्र प्रयांतु ते ॥ रूपं देहि जयं देहि भाग्यैश्वर्यं च देहि मे ॥ पुत्रान्देहि धनं देहि सर्वान् कामांश्च देहि मे ॥ इति विसृज्य ॥ सूर्यायार्घ्यं दद्यात् ॐ नमो धर्मनिधानाय नमः सुकृतसाक्षिणे ॥ नमो यज्ञवराहाय भास्कराय नमो नमः ॥ इति ॥ यज्ञच्छिद्रं तपश्छिद्रं यच्छिद्रं पूजने मम ॥ सर्वं तदच्छिद्रमस्तु भास्करस्य प्रसादतः ॥ आवाहनं न जानामि नैव जानामि पूजनम् ॥ सर्वं कृतं न जानामि क्षमस्व परमेश्वर ॥ इति विसर्जयेत् ॥ ततो दद्यादाशीर्वादम् ॥ आरोग्यं तरणिः शशी विमलतां भौमः प्रतापोदयं बुद्धिं शीतकरात्मजःसुरगुरुर्ज्ञानं सुखंभार्गवः॥शौर्य्यं सूर्यसुतश्च राहुरभयं केतुः प्रसादं सदा ब्रह्माविष्णुशिवेश्वरीप्रभृतयो देवाः सदा पान्तु वः ॥१॥ मंत्रार्थाः सफलाः सन्तु पूर्णाः सन्तु मनोरथाः ॥ शत्रूणां बुद्धिनाशोस्तु मित्राणामुदयस्तव ॥२॥ अथ संक्षेपाच्छायापात्रदानम् ॥ ततश्छायापात्रं स्वपुरतस्तिलराश्युपरि संस्थाप्य तत्राघारितशुद्ध-

गोघृतं पूरयेत् ।। ततः कर्त्ता स्वमुखमवलोकयेत् तत्र मंत्रः ॐ आज्यं सुराणामाहारमाज्यं पापहरं परम् ।। आज्य-मध्ये मुखं दृष्ट्वा सर्वपापैः प्रमुच्यते ।। घृतं नाशयते व्याधिं घृतं च हरते रुजम् ।। घृतं तेजोऽधिकरणं घृत मायुः प्रवर्द्धते ।। इति मुखं दृष्ट्वा हिरण्यं प्रक्षिपेत् ॐ हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ।। अनंतपुण्यफल-दमतः शांति प्रयच्छ मे ।।ततः ॐइदं स्नानं कांस्यपात्रोप-न्यस्तशुद्धघृतबिंबप्रतिबिंबितात्मच्छायापात्रायनमः एवं गंधादिभिः पूजयेत् वस्त्रादिकं चार्पयेत्पूर्बवत् ।। ततः सोपकरणैतत्कांस्यपात्रोपन्यस्तघृतबिंबप्रतिबिंबितात्म-च्छायापात्राय नमः इति त्रिःपठेत् ।। अद्यामुकदेवप्रीति-पूर्वकसोपकरणच्छयापात्रदानं ददानि ॐ हरिस्तत्सदद्ये-त्यादि० मम शरीरदीर्घायुरारोग्यसुतेजस्वित्वसुभगत्व-सर्वपापप्रशमनोत्तरसमस्तसूर्य्यादिग्रहजन्यजनितजनिष्य माणदुष्टस्थानस्थितसूचितारिष्टोपशमनताप्रतिपत्त्या-धिव्याधिदुःस्वप्नादिसकलदुर्निमित्तोपशांतित्वैतदमुकप्र-माणकांस्यपात्रोपन्यस्तं गोघृतबिंदुकणिका समसंख्या-वर्षाच्छिन्ननैरुज्यचिरंजीवित्वकामैतदमुकपलनिर्मितं शु-द्धकांस्यपात्रममुकप्रमाणगोघृतपूरितममुकपरिमितसुवर्ण-संयुतं रक्तवस्त्राच्छादितं सुपूजितं सोपकरणं चंद्रमोग्निप्र-जापतिबृहस्पतिदैवतं यथा नामगोत्राय ब्राह्मणायाहं ददे ।। अद्य कृतैतच्छायापात्रदानप्रतिष्ठार्थमेतद्द्रव्यममुक-

मेमतार्कं यथानाशेति ततः प्रार्थयेत् ।। ॐ यानि कानि च
पापानि मया कामकृतानि च ।। कांस्यपात्रप्रदानेन तानि
नश्यन्तु मे सदा ।। यत्कृतं मे स्वकायेन मनसा वचसा
त्वघम् ।। तत्सर्वं नाशमायातु कांस्यपात्रप्रदानतः ।। इति
कांस्यपात्रदानमंत्रः ।। ॐ कामधेनोः समुद्भूतं देवाना-
मुत्तमं हविः ।। आयुर्विवर्द्धते दातुराज्यं पातुसदैव माम्
।। इति घृतस्य ।। हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः
।। अनंतपुण्यफलदमतः शांतिं प्रयच्छ मे ।। इति सुवर्णस्य
।। रक्तवस्त्रमिदं यस्मादादित्यस्य प्रियं परम् ।। प्रदाना-
दस्य मे शांतिं प्रयच्छतु दिवाकरः ।। इति वस्त्रस्य ।।
एतान्मंत्रान्पठित्वा हस्तद्वयेन तत्पात्रंगृहीत्वा ब्राह्मणाय
समर्पयेत् ॐ कांस्यपात्रमिदं शुद्धमधारितघृतान्वितम् ।।
स्वर्णात्ममूर्तिसंयुक्तं रक्तं वसुघृतान्वितम्।।सदक्षिणं मया
तुभ्यं स्वात्मदेहमिदं परम् ।। छायापात्रं परं प्रीत्यागृहाण
द्विजसत्तम ।। दानेनानेन मा सन्तु सर्वरोगाऽदयो मम ।।
आयुरारोग्यमैश्वर्यं प्रददातु दिवाकरः ।। इत्युच्चार्य-
छायापात्रं ब्राह्मणहस्ते दद्यात् ।। तथान्यदानादिकं
तत्सांगतार्थमपि कुर्यात् ।। इति श्रीनानाविधशास्त्रोक्त-
छायापात्रदानम् ।। तथाच ।। मुथहादानं यथोक्तग्रहप्रीति-
पूर्वकैतद्दानमपि कुर्यात् ।। इति श्रीनानानिबंधशास्त्रोक्तं
जन्मदिनपूजादिकं पंडित वामनेन संशोधितं कृतं
पूर्णतामगात् ।। शुभम् ।। ॐ श्रीगणेशाय नमः ।।

अथारार्त्तिक्य प्रारंभः ॥ ॐ प्रकटितदंष्ट्रे खर्वेलयनी-लाभ्राभे ॥ पिंगजटाभरजूटे विद्युत्प्रतिमाभे ॥ जय जय ते तारे ॥१॥ व्याघ्रांबर कटिभालाक्षोभ्येन्द्रुतिभूषे ॥ नरशिरपरिधृतमालेऽधिक्यारुणनेत्रे ॥ जय० २ ॥ निजजनजडिमन्हेतिप्रज्ञाद्यनशंदे ॥ ज्ञानाज्ञानोपार्जित-कल्मषपरिच्छेदे ॥ जय० ॥३॥ पाणिषु शिरोऽसिकर्तृक-पालाब्जेशंके ॥ धन्वीस्थे शवहृदये शवदहनालयके ॥ जय० ॥४॥ आदिममायालज्जाकूर्चफडितिमंत्रे ॥ सार्द्ध-शराणप्रजापकसलाभीष्टप्रदे ॥ ज० ॥५॥ श्वेताह्या-हिविभूषितगात्रेऽट्टविहासे ॥ कोटिरविप्रभलपने सर्गत्रैलयके ॥ जय० ॥६॥ शुंभनिशुंभविमर्दिनि धूमा-क्षान्तकरे ॥ सानुजचण्डनिकृंतनि रक्तजदैत्यहरे ॥जय० ॥७॥ व्याजात्कैटभमधुविदारिणि महिषाद्यंतकरे ॥ भांडासुरादि मर्दिनि ब्रह्माब्रह्मपरे ॥ जय० ॥८॥ शक्रेशाजजनार्दनभृतशुभशपथस्थे॥निजगणसंवृतआगम-शास्त्रास्मृतिगीते ॥ जय० ॥९॥ मोहाद्गणपतिविष्णु-रवीशादीन्प्रजपंति॥आद्ये त्वयि संलीनास्त्वतः प्रभवन्ति ॥ जय० ॥१०॥ विश्वे कस्ते कर्त्तुं मातस्तेजस उपमाम् अन्तरतीव दयार्द्रे बाह्ये कठिनास्ये ॥ जय ॥११॥ वारिजजादिकदेवा वक्तुं नहि शक्याः॥प्रतिक्षणकल्मष-भयति शमनं त्वं कुरुषे ॥ जय० ॥१२॥ आद्यातारा-षोडशी भुवनेशिनी भामा ॥ छिन्ना धूमाबगुला मातंगी

त्वं मा ।। जय०।।१३।।लोके पालनकार्यं मे विष्णुप्रेरणके ।। लयसर्गाभ्यामंबशंम्वजप्रेषणके जय० ।।१४।। तव जनपदरजलेशाद्वामन इति मांड्यः ।। स्तवमारार्त्तिक-माचरदंबानुचरोऽज्ञः ।। जय० ।।१५।। एनामेकजटायाः प्रपठंत्यारार्तिम् ।। ते स्त्रीधनसुतविद्यां प्रलभन्ते मुक्तिम् ।। जय० ।।१६।।

इति आरार्तिक्यंसंपूर्णम् ।।शुभम् ।।